द्वैतशेषा विशेषा ॥ त्वयि विनिहितमेतन्मेऽज्ञ सर्वं स्वकीयं ह्यधिप जयतु पूजा त्वद्यशोमालिनीयम् ॥ १८ ॥ यन्मे न्यूनं संमतं स्थूलदृष्ट्या भूमन् तेऽनुक्रोशपीयूषवृष्ट्या । नित्यं प्रेयः स्वप्रभं शालिनीयं तस्याभूत्संपूर्णता शालिनीयम् ॥ १९ ॥ रोधनं ह्यात्मनः शोधनं ह्यात्मनः पूजनं ह्यात्मनो भोजनं स्वात्मनः । यत्र सैषाऽऽत्मपूजाऽस्तु कण्ठे सतां स्रग्विणी मा परा स्त्रीव कण्ठे सताम् ॥ २० ॥ इति श्रीमद्वासुदेवानन्दसरस्वतीविरचिताऽऽत्मपूजास्तोत्रं संपूर्णम् ॥

## ३५७. शंकराचार्यकृतगुर्वष्टकम् ।

श्रीगणेशाय नमः ॥ शरीरं सुरूपं तथा वा कलत्रं यशश्चारु चित्रं धनं मेरुतुल्यम् । मनश्चेन्न लग्नं गुरोरंघ्रिपद्मे ततः किं ततः किं ततः किं ततः किम् ॥ १ ॥ कलत्रं धनं पुत्रपौत्रादि सर्वं गृहं बांधवाः सर्वमेतद्धि जातम् । गुरोरंघ्रिपद्मे मनश्चेन्न लग्नं ततः किं० ॥ २ ॥ षडंगादिवेदो मुखे शास्त्रविद्या कवित्वादिगद्यं सुपद्यं करोति । गुरोरंघ्रिपद्मे० ॥ ३ ॥ विदेशेषु मान्यः स्वदेशेषु धन्यः सदाचारवृत्तेषु मत्तो न चान्यः । गुरोरंघ्रिपद्मे० ॥ ४ ॥ क्षमामंडले भूपभूपालवृंदैः सदा सेवितं यस्य पादारविंदम् । गुरोरंघ्रिपद्मे० ॥ ५ ॥ यशो मे गतं दिक्षु दानप्रतापाज्जगद्वस्तु सर्वं करे यत्प्रसादात् । गुरोरंघ्रिपद्मे० ॥ ६ ॥ न भोगे न योगे न वा वाजिराजौ न कांतामुखे नैव वित्तेषु चित्तम् । गुरोरंघ्रिपद्मे० ॥ ७ ॥ अरण्ये न वा स्वस्य गेहे न कार्ये न देहे मनो वर्तते मे त्वनर्घ्ये । गुरोरंघ्रिपद्मे० ॥ ८ ॥ अनर्घ्याणि रत्नानि मुक्तानि सम्यक्समालिंगिता कामिनी यामिनीषु । गुरोरंघ्रिपद्मे० ॥ ९ ॥ गुरोरष्टकं यः पठेत्

पुण्यदेही यतिर्भूपतिर्ब्रह्मचारी च गेही। लभेद्वांछितार्थं पदं ब्रह्म-संज्ञं गुरोरुक्तवाक्ये मनो यस्य लग्नम् ॥ १० ॥ इति श्रीमत्परम-हंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं गुरोरष्टकं समाप्तम् ॥

## ३५८. दत्तात्रेयस्तोत्रम्।

श्रीगणेशाय नमः ॥ जटाधरं पांडुरंगं शूलहस्तं कृपानिधिम्। सर्वरोगहरं देवं दत्तात्रेयमहं भजे ॥ १ ॥ अस्य श्रीदत्तात्रेयस्तोत्र-मंत्रस्य भगवान्नारद ऋषिः, अनुष्टुप् छंदः, श्रीदत्तः परमात्मा देवता, श्रीदत्तप्रीत्यर्थे जपे विनियोगः ॥ जगदुत्पत्तिकर्त्रे च स्थितिसंहारहेतवे । भवपाशविमुक्ताय दत्तात्रेय नमोऽस्तु ते ॥ १ ॥ जराजन्मविनाशाय देहशुद्धिकराय च। दिगंबर दयामूर्ते दत्तात्रेय० ॥ २ ॥ कर्पूरकांतिदेहाय ब्रह्ममूर्तिधराय च। वेदशास्त्रपरि-ज्ञाय दत्तात्रेय० ॥ ३ ॥ ह्रस्वदीर्घकृशस्थूलनामगोत्रविवर्जित। पंचभू-तैकदीप्ताय दत्तात्रेय० ॥ ४ ॥ यज्ञभोक्त्रे च यज्ञाय यज्ञरूपधराय च। यज्ञप्रियाय सिद्धाय दत्तात्रेय नमोऽस्तु ते ॥ ५ ॥ आदौ ब्रह्मा मध्ये विष्णुरंते देवः सदाशिवः। मूर्तित्रयस्वरूपाय दत्तात्रेय० ॥ ६ ॥ भोगालयाय भोगाय योगयोग्याय धारिणे । जितेंद्रियजितज्ञाय दत्तात्रेय० ॥ ७ ॥ दिगंबराय दिव्याय दिव्यरूपधराय च। सदोदित-परब्रह्म दत्तात्रेय० ॥ ८ ॥ जंबुद्वीपे महाक्षेत्रे मातापुरनिवासिने। जयमान सतां देव दत्तात्रेय० ॥ ९ ॥ भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे। नानास्वादमयी भिक्षा दत्तात्रेय० ॥ १० ॥ ब्रह्मज्ञानमयी मुद्रा वस्त्रे चाकाशभूतले । प्रज्ञानघनबोधाय दत्तात्रेय० ॥ ११ ॥ अवधूत सदानंद परब्रह्मस्वरूपिणे। विदेहदेहरूपाय दत्तात्रेय० ॥ १२ ॥ सत्यरूप सदाचार सत्यधर्मपरायण । सत्याश्रय परोक्षाय

दत्तात्रेय० ॥ १३ ॥ शूलहस्त गदापाणे वनमालासुकंधर । यज्ञसूत्रधर ब्रह्मन्दत्तात्रेय० ॥ १४ ॥ क्षराक्षरस्वरूपाय परात्परतराय च । दत्त-मुक्तिपरस्तोत्र दत्तात्रेय० ॥ १५ ॥ दत्त विद्याढ्य लक्ष्मीश दत्तस्वात्म-स्वरूपिणे । गुणनिर्गुणरूपाय दत्तात्रेय० ॥ १६ ॥ शत्रुनाशकरं स्तोत्रं ज्ञानविज्ञानदायकम् । सर्वपापं शमं याति दत्तात्रेय० ॥ १७ ॥ इदं स्तोत्रं महद्दिव्यं दत्तप्रत्यक्षकारकम् । दत्तात्रेयप्रसादाच्च नारदेन प्रकीर्तितम् ॥ १८ ॥ इति श्रीनारदपुराणे नारदविरचितं दत्तात्रेय-स्तोत्रं संपूर्णम् ॥

## ३५९. दत्तापराधक्षमापनस्तोत्रम् ।

श्रीगणेशाय नमः ॥ दत्तात्रेयं त्वां नमामि प्रसीद त्वं सर्वात्मा सर्वकर्ता न वेद ॥ कोऽप्यन्तं ते सर्वदेवाधिदेव ज्ञाताज्ञातान्मेऽप-राधान्क्षमस्व ॥ १ ॥ त्वदुद्भवत्वात्त्वदधीनधीत्वात्त्वमेव मे वन्द्य उपास्य आत्मन् ॥ अथापि मौढ्यात्स्मरणं न ते मे कृतं क्षमस्व प्रियकृन्महात्मन् ॥ २ ॥ भोगापवर्गप्रदमार्तबन्धुं कारुण्यसिन्धुं परिहाय बन्धुम् ॥ हिताय चान्यं परिमार्गयन्ति हा मादृशो नष्ट-दृशो विमूढाः ॥ ३ ॥ न मत्समो यद्यपि पापकर्ता न त्वत्समोऽथापि हि पापहर्ता ॥ न मत्समोऽन्यो दयनीय आर्य न त्वत्समः क्वापि दयालुवर्यः ॥ ४ ॥ अनाथनाथोऽसि सुदीनबन्धो श्रीशाऽनुकम्पामृत-पूर्णसिन्धो ॥ त्वत्पादभक्तिं तव दासदास्यं त्वदीयमन्त्रार्थदृढैकनि-ष्ठाम् ॥ ५ ॥ गुरुस्मृतिं निर्मलबुद्धिमाधिव्याधिक्षयं मे विजयं च देहि ॥ इष्टार्थसिद्धिं वरलोकवश्यं धनान्नवृद्धिं वरगोसमृद्धिम् ॥ ६ ॥ पुत्रादिलब्धिं म उदारतां च देहीश मे चास्त्वभयं हि सर्वतः ॥ ब्रह्माग्निभूभ्यो नम ओषधीभ्यो वाचे नमो वाक्पतये च विष्णवे ॥७॥

शान्ताऽस्तु भूर्नः शिवमन्तरिक्षं द्यौश्चाभयं नोऽऽस्तु दिशः शिवाश्च ॥ आपश्च विद्युत्परिपान्तु देवाः शं सर्वतो मेऽभयमस्तु शान्तिः ॥ ८ ॥ इति श्रीमद्वासुदेवानन्दसरस्वतीविरचितं श्रीदत्तापराधक्षमापनस्तोत्रं संपूर्णम् ॥

## ३६०. श्रीदत्तप्रार्थनाचतुष्कम् ।

श्रीगणेशाय नमः ॥ समस्तदोषशोषणं स्वभक्तचित्ततोषणं निजाश्रितप्रपोषणं यतीश्वराग्र्यभूषणम् ॥ त्रयीशिरोविभूषणं प्रदर्शितार्थदूषणं भजेऽत्रिजं गतैषणं विभुं विभूतिभूषणम् ॥ १ ॥ समस्तलोककारणं समस्तजीवधारणं समस्तदुष्टमारणं कुबुद्धिशक्तिजारणम् ॥ भजद्भयाद्रिदारणं भजत्कुकर्मवारणं हरिं स्वभक्ततारणं नमामि साधुचारणम् ॥ २ ॥ नमाम्यहं मुदास्पदं निवारिताखिलापदं समस्तदुःखतापदं मुनीन्द्रवंद्य ते पदम् ॥ यदञ्चितान्तरा मदं विहाय नित्यसंमदं प्रयान्ति नैव ते भिदं मुहुर्भजन्ति चाविदम् ॥ ३ ॥ प्रसीद सर्वचेतने प्रसीद बुद्धिचेतने स्वभक्तहृन्निकेतने सदाम्ब दुःखशातने ॥ त्वमेव मे प्रसूर्मता त्वमेव मे प्रभो पिता त्वमेव मेऽखिलेहितार्थदोऽखिलार्तितोऽविता ॥ ४ ॥ इति श्रीमद्वासुदेवानन्दसरस्वतीविरचितं श्रीदत्तात्रेयप्रार्थनाचतुष्कं संपूर्णम् ॥

## ३६१. दत्तप्रबोधः ।

श्रीगणेशाय नमः ॥ नित्यो हि यस्य महिमा न हि मानमेति स त्वं महेश भगवन्मघवन्मुखेड्य ॥ उत्तिष्ठ तिष्ठदमृतैरमृतैरिवोक्तैर्गीतागमैश्च पुरुधा पुरुधामशालिन् ॥ १ ॥ भक्तेषु जागृहि मुदा हिमुदारभावं तल्पं विधाय सविशेषविशेषहेतो ॥ यः शेष एष सकलः सकलः स्वगीतैस्त्वं जागृहि श्रितपते तपते नमस्ते ॥ २ ॥ दृष्ट्वा

जनान् विविधकष्टवशान्दयालुश्चयात्मा बभूव सकलार्तिहरोऽत्र दत्तः ॥ अत्रेर्मुनेः सुतपसोऽपि फलं च दातुं बुद्धस्व स त्वमिह यन्महिमानियत्तः ॥ ३ ॥ आयात्यशेषविनुतोऽप्यवगाहनाय दत्तोऽधुनेति सुरसिन्धुरपेक्षते त्वाम् ॥ क्षेत्रे तथैव कुरुसंज्ञक एत्य सिद्धास्तस्थुस्तवाचमनदेश इनोदयात्प्राक् ॥ ४ ॥ संध्यामुपासितुमजोऽप्यधुना गमिष्यत्याकाङ्क्षते कृतिजनः प्रतिवीक्षते त्वाम् ॥ कृष्णातटेऽपि नरसिंहसुवाटिकायां सारार्तिकः कृतिजनः प्रतिवीक्षते त्वाम् ॥ ५ ॥ गान्धर्वसंज्ञकपुरेऽपि सुभाविकास्ते ध्यानार्थमत्र भगवान्समुपैष्यतीति ॥ मत्वास्थुराचरितसंनियताह्नवाद्या उत्तिष्ठ देव भगवन्नत एव शीघ्रम् ॥ ६ ॥ पुत्री दिवः खगगणान् सुचिरं प्रसुप्तानुत्पातयत्यरुणगा अधिरुह्य तूषाः। काषायवस्त्रमपिधानमपावृणूद्यन्ताक्ष्योंग्रजोऽयमवलोकय तं पुरस्तात् ॥ ७ ॥ शाटीनिभाभ्रपटलानि तवेन्द्रकाष्ठाभागं यतीन्द्र रुरुधुर्गरुडाग्रजोऽतः ॥ अस्माभिरीश विदितो ह्युदितोऽयमेवं चन्द्रोऽपि ते मुखरुचिं चिरगां जहाति ॥ ८ ॥ द्वारेऽर्जुनस्तव च तिष्ठति कार्तवीर्यः प्रह्लाद एष यदुरेष मदालसाजः ॥ त्वां द्रष्टुकाम इतरे मुनयोऽपि चाहमुत्तिष्ठ दर्शय निजं सुमुखं प्रसीद ॥ ९ ॥ एवं प्रबुद्ध इव संस्तवनादभूत्स मालां कमण्डलुमधो डमरुं त्रिशूलम् ॥ चक्रं च शंखमुपरि स्वकरैर्दधानो नित्यं स मामवतु भावितवासुदेवः ॥ १० ॥ इति वासुदेवानंदसरस्वतीविरचितो दत्तप्रबोधः संपूर्णः ॥

## ३६२. दत्तात्रेयाष्टोत्तरशतनामावलिस्तोत्रम्।

श्रीगणेशाय नमः ॥ ॐकारतत्त्वरूपाय दिव्यज्ञानात्मने नमः। नमोऽतीतमहाधाम्न ऐन्द्यर्द्ध्या ओजसे नमः ॥ १ ॥ नष्टमत्सरगम्यायाऽगम्याचारात्मवर्त्मने। मोचितामेध्यकृतये ह्रींबीजश्राणितश्रिये ॥ २ ॥

मोहादिविभ्रमान्ताय बहुकायधराय च । भक्तदुर्वैभवच्छेत्रे क्लींबीजवरजापिने ॥ ३ ॥ भवहेतुविनाशाय राजच्छोणाधराय च । गतिप्रकम्पिताण्डाय चारुव्यायतबाहवे ॥ ४ ॥ गतगर्वप्रियायाऽस्तु यमादियतचेतसे । वशिताजातवश्याय मुण्डिने अनसूयवे ॥ ५ ॥ वदद्वरेण्यवाग्जालाविस्पष्टविविधात्मने । तपोधनप्रसन्नायेडापतिस्तुतकीर्तये ॥ ६ ॥ तेजोमण्यन्तरङ्गायाऽद्मरसद्मविहापिने । आन्तरस्थानसंस्थायाऽयैश्वर्यश्रौतगीतये ॥ ७ ॥ वातादिभययुग्भावहेतवे हेतुहेतवे। जगदात्मात्मभूताय विद्विषत्षट्कघातिने ॥ ८ ॥ सुरवर्गोद्धृते भूत्या असुरावासभेदिने । नेत्रे च नयनाक्ष्णेऽचिच्चेतनाय महात्मने ॥ ९ ॥ देवाधिदेवदेवाय वसुधासुरपालिने । याजिनामग्रगण्याय द्रांबीजजपतुष्टये ॥ १० ॥ वासनावनदावाय धूलियुग्देहमालिने । यतिसंन्यासिगतये दत्तात्रेयेति संविदे ॥ ११ ॥ यजनास्यभुजेऽजाय तारकावासगामिने । महाजवास्पृग्रूपायाऽऽत्ताकाराय विरूपिणे ॥ १२ ॥ नराय धीप्रदीपाय यशस्वियशसे नमः । हारिणे चोज्वलाङ्गायाऽत्रेस्तनूजाय शंभवे ॥ १३ ॥ मोचितामरसंघाय धीमतां धीकराय च । बलिष्ठविप्रलभ्याय यागहोमप्रियाय च ॥ १४ ॥ भजन्महिमविख्यात्रेऽमरारिमहिमच्छिदे । लाभाय मुण्डिपूज्याय यमिने हेममालिने ॥ १५ ॥ गतोपाधिव्याधये च हिरण्याहितकान्तये । यतीन्द्रचर्यां दधते नरभावौषधाय च ॥ १६ ॥ वरिष्ठयोगिपूज्याय तन्तुसंतन्वते नमः । स्वात्मगाथासुतीर्थाय सुश्रिये षट्कराय च ॥ १७ ॥ तेजोमयोत्तमाङ्गाय नोदनानोद्यकर्मणे । हान्यासिस्मृतिविज्ञात्र ओंकारितसुभक्तये ॥ १८ ॥ रुक्शुङ्मनःखेदहृते दर्शनाविषयात्मने । राङ्कवाततवस्त्राय नरतत्त्वप्रकाशिने ॥ १९ ॥ द्रावितप्रणतावायाऽऽत्तस्वजिष्णुस्वराशये । राजन्यास्यैकरूपाय मस्थाय मसुबन्धवे ॥ २० ॥ यतये चोदनातीत-

प्रचारप्रभवे नमः । मानरोषविहीनाय शिष्यसंसिद्धिकारिणे ॥ २१ ॥ गत्रे पादविहीनाय चोदनाचोदितात्मने । यवीयसेऽऽलर्कदुःखवारिणेऽखण्डितात्मने ॥ २२ ॥ ह्रींबीजायाऽर्जुनेष्टाय दर्शनादर्शितात्मने । नतिसंतुष्टचित्ताय यतये ब्रह्मचारिणे ॥ २३ ॥ इत्येष सत्स्तवो वृत्तोऽयात्कं देयात्प्रजापिने । मस्करीशोमनुस्यूतः परब्रह्मपदप्रदः ॥ २४ ॥ इत्यनेकमंत्रगर्भितं श्रीदत्तात्रेयाष्टोत्तरशतनामावलिस्तोत्रं संपूर्णम् ॥

## ३६३. दत्तवेदपादस्तुतिः ।

श्रीदत्तात्रेयाय नमः ॥ अग्निमीळे परं देवं यज्ञस्य त्वां ह्यधीश्वरम् ॥ स्तोमोऽयमग्रियोऽर्थ्यस्ते हृदिस्पृगस्तु शंतमः ॥ १ ॥ अयं देवाय दूराय गिरां स्वाध्याय सात्वताम् ॥ स्तोमोऽस्त्वनेन विन्देयं तद्विष्णोः परमं पदम् ॥ २ ॥ एता या लौकिकाः सन्तु हीना वाचोऽपि नः प्रियाः ॥ बालस्येव पितुष्टे त्वं स नो मृळ महाँअसि ॥ ३ ॥ अयं वां नात्मनोस्तत्त्वमगम्यास्ति दुर्मनाः ॥ हृद्रोगं मम सूर्य त्वं हरिमाणं च नाशय ॥ ४ ॥ प्रमन्महेऽस्मान्विद्धीति स्तोतारस्ते वयं नमः ॥ भगवो देव ते स्तोममारे अस्मै च शृण्वते ॥ ५ ॥ इन्द्रो मदाय यातीह सत्वरं सोमिनो यथा ॥ स्तोतॄनेहि तथाऽस्माँस्ते माध्वीर्गावो भवन्तु नः ॥ ६ ॥ द्वे विरूपेऽत्र मायायाऽस्तेऽत्र मग्नोऽस्मि पीडितः ॥ माभितः संतपन्तीह सपत्नीरिव पर्शवः ॥ ७ ॥ इदं श्रेष्ठमपि प्राप्य जन्म गन्ताध एव तत् ॥ कुरु प्रसादं ज्ञात्वैतत्तेनाहं भूरि चाकन ॥ ८ ॥ प्रवस्तुज्ञानाज्जहाति निष्कामश्चेन्मृतिं त्वहम् ॥ न तादृशोऽतः कामादि सर्वं रक्षो निबर्हय ॥ ९ ॥ सुषुमासूर्धियः स्तोमैरागच्छैते वयं विभो ॥ त्वदंशास्त्वं पतिर्नोऽसि देवो देवेषु मेधिरः ॥ १० ॥ वसू रूपं

रूपमिह प्रतिरूपोऽसि नो पृथक् ॥ एतानि भूतानि विदुर्ब्राह्मणा ये मनीषिणः ॥ ११ ॥ तं नु त्वां किं ब्रुवेऽल्पज्ञो भगवन्तं क्षमस्व भोः ॥ ओषमागहि मां त्वं चेत्सखा सन्नतिमन्यसे ॥ १२ ॥ ता वासना घ्नन्ति यथा वृश्चिकस्यारसं विषम् ॥ अतो मां पाहि भूयिष्ठां नमउक्तिं विधेम ते ॥ १३ ॥ नि होता सीदसि विभो यत्वं यष्टुर्गृहे प्रिय ॥ तं त्वा ह्वये ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते ॥ १४ ॥ सेमामविड्ढि प्रभृतिमीशिषे योऽव मानिशम् ॥ त्वं विश्वेषां यदीशानो ब्रह्मणा वेषि मे हवम् ॥ १५ ॥ मन्दः स्वकोऽयं दीनोऽज्ञ इति विद्वान्भवान्प्रभुः ॥ इन्द्र आशाभ्यः परि मां सर्वाभ्यो अभयं करत् ॥ १६ ॥ प्र य आरु पितां श्रान्तिं त्वत्प्रसादाज्जहाति सः ॥ विमुच्यते तद्विप्रास्त्वां जागृवांसः समिन्धते ॥ १७ ॥ इच्छन्ति देवा अपि ते प्रसादाय नृजन्म तत् ॥ विद्वान्नामानि ते दत्त विश्वामिर्गीर्भिरीमहे ॥ १८ ॥ इन्द्र त्वा भजतः सूरेर्दुर्लभं किं तरामि तत् ॥ भक्त्या क्लेशादि ते नावा गम्भीराँ उदधीँरिव ॥ १९ ॥ न ता रोद्धुं धियः शक्ता योगेनाऽपि ततः सदा ॥ त्रातारं धीमहीश त्वां धियो यो नः प्रचोदयात् ॥ २० ॥ वैश्वानराय दत्त्वाऽन्नं विधिलब्धं सदैव ते ॥ भवामो भजने सक्ता अस्माकं शृणुधी हवम् ॥ २१ ॥ एवा त्वामिन्द्र विप्रासौ जागृवांसो विपन्यवः ॥ स्तुवन्त्येभ्यो हि ते कोऽपि न ज्यायाँ अस्ति वृत्रहन् ॥ २२ ॥ प्रऋभुभ्यो गृणद्भ्यस्ते मर्त्येभ्योऽप्यमृतत्वमित् ॥ दत्तं स्मृत्वा तव मनोरथ आयातु पाजसा ॥ २३ ॥ इदमुत्यदिषं श्रेयो यज्जग्ध्वा परितृप्यति ॥ साधुस्तद्भजनं तेऽस्मे इषं स्तोतृभ्य आभर ॥ २४ ॥ त्वामग्ने मायिनं मायां जेतारमपराजितम् ॥ हित्वा कं शरणं यामः स नो बोधि श्रुधी हवम् ॥ २५ ॥ मही महेशोऽज्ञानेन भवानवतु

मावृतम् ॥ यथा वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ॥ २६ ॥ प्रयुञ्जती यदात्मानं मनीषा मनसा सह ॥ तदैव भवतैकान्तं जानता संगमेमहि ॥ २७ ॥ ऋतस्य गोपास्त्वं देहि मह्यं शं युञ्जते धियः ॥ भीताय नाधमानाय ऋषये सप्तवध्रये ॥ २८ ॥ त्वं हि पातासि नो दत्त परिबाधस्व दुष्कृतम् ॥ कामादीन्यस्य बीजानि जहि रक्षांसि सुक्रतो ॥ २९ ॥ पिबा सोममिति श्रुत्वा यष्टृहूतिं शुभं द्रवत् ॥ आयासि पुरुरूप त्वामासु गोषूपपृच्यताम् ॥ ३० ॥ इन्द्रं वोतान्यं न पृथङ् मन्ये मायाभिरिन्द्रवान् ॥ पुरुरूप इतीक्षे त्वममित्राँ सुषहान्कृधि ॥ ३१ ॥ यज्ञा यज्ञाधीश सर्वे त्वन्मया अपि तेषु नः ॥ जपयज्ञो मतस्तेन समु पूष्णा गमेमहि ॥ ३२ ॥ स्तुषे नराप्यं तुष्टः सन्नथो यस्या अयोमुखम् ॥ मायां जित्वा भवान्तां मे विश्वाहा शर्म यच्छतु ॥ ३३ ॥ जुषस्व स्तोममीशैते प्रियासः सन्तु सूरयः ॥ वयं स्तोमप्रियानेन यच्छा नः शर्म दीर्घश्रुत् ॥ ३४ ॥ उग्रो जज्ञे मृत्युरयमदुग्धा इव धेनवः ॥ धियो मेऽनेनेदृगीश न जातो न जनिष्यते ॥ ३५ ॥ प्रब्रह्मैहीदमार्ण्योर्वारुकमिव बन्धनात् ॥ मृत्युंजय प्रमादाख्यान्मृत्योर्मुक्षीय माऽमृतात् ॥ ३६ ॥ यदद्य वर्ष्म तेनैव पश्येम शरदः शतम् ॥ स्तोत्राय ते हते मृत्यौ जीवेम शरदः शतम् ॥ ३७ ॥ प्रत्युत्तमं महेशं त्वां मनामह इहागहि ॥ मृळा सुक्षत्र मृळय मा नो दुःशंस ईशत ॥ ३८ ॥ तिस्रो वाचस्तेऽत्र वरां क ईशानं न याचिषत् ॥ भक्त्या गृणीमसःत्वां स्तोत्रैस्तेभिर्नस्तूयमागहि ॥ ३९ ॥ दूराद्विहाय सर्वं त्वामृशयो ये च तुष्टुवः ॥ मर्ता अमर्त्यस्य ते तद्भूरि नाम मनामहे ॥ ४० ॥ य इन्द्र त्वं यो नमसा स्वध्वरो हीति संस्तुतः ॥ इन्द्रो ब्रह्मेन्द्र ऋषिरित्युप ब्रह्माणि नः शृणु ॥ ४१ ॥

वयमु त्वा वरं देवमस्मभ्यं शर्म सप्रथः ॥ मनामहे पृणन्तं तदभित्वामिन्द्र नोनुमः ॥ ४२ ॥ प्रकृतात्त्यपि सूक्तानि शृण्वन्तं जातवेदसम् ॥ त्वां गृणन्ति न के त्वं हि येषामिन्द्रो युवा सखा ॥ ४३ ॥ त्वावतः पाहि नो मर्त्यान्यत इन्द्र धयामहे ॥ आदिश्य पदभक्तिं ते ततो नो अभयं कृधि ॥ ४४ ॥ आ त्वा रथं न तुरगैः स्तोत्रैस्त्वा वर्तयामसि ॥ स त्वं न इन्द्र मृळय यस्य ते स्वादु सख्यमित् ॥ ४५ ॥ आ प्रबोधं भवोऽबोधः स्वप्नवद्दुःखदोऽशुचिः ॥ पतितान्दुःखितान्नृन्नः पाहि त्वं शृणुधी गिरः ॥ ४६ ॥ इन्द्राय साम ते गातुं न क्षमो नाम ते गृणे ॥ बण्महाँऽअसि सूर्य त्वं सत्रादेव महाँऽअसि ॥ ४७ ॥ सोमः पुनानोंतारामो मया त्वं नाधिलक्षितः ॥ ईक्षे तुच्छान्बहिर्भोगान्योषा जारमिव प्रियम् ॥ ४८ ॥ प्रण इन्दोरपि स्मरं रूपं ते दर्शयामलम् ॥ नॄन्स्तोतॄन्पाह्यंहसो नो जहि रक्षांसि सुक्रतो ॥ ४९ ॥ हि न्वन्ति द्वैतमस्त्यस्माद्भयं विन्दति मामिह ॥ यदन्ति दूरके यच्च पवमान वि तज्जहि ॥ ५० ॥ धर्ता कारकशक्तीनां सर्वेषां त्वमिहैक इत् ॥ यशोऽत्रेदं पवित्रं ते विततं ब्रह्मणस्पते ॥ ५१ ॥ असर्जि भवता विश्वमनित्यमवशं बृहत् ॥ त्वं संस्मर ज्ञ शरण वत्सं जातं न धेनवः ॥ ५२ ॥ पुरोजितीश भो भूमन् तत्र मामम्रतं कृधि ॥ यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ॥ ५३ ॥ अयं स इति विद्वान्त्सन्यमाय घृतवद्धविः ॥ कुतो जुहोस्यतोऽदेवा यमाय जुहुता हविः ॥ ५४ ॥ निवर्तध्वमिनो देवा भद्रं नो अपि वातय ॥ मनो हरे मां पाह्यार्तं पिता पुत्रमिव प्रियम् ॥ ५५ ॥ प्रमा प्रमाता प्रमेयं त्रिपुटीह न विद्यते ॥ रूपं तेऽविकृतं सत्त्वं मधुमन्मे परायणम् ॥ ५६ ॥ प्रह्वोतारोऽत्रैव मनोन्वाहुवामह इत्यतः ॥ गमादि मनसो नास्य यो

यज्ञस्य प्रसाधनः ॥ ५७ ॥ ये यज्ञेनार्चन्त्यनेन सर्वे नन्दन्ति ते त्वया ॥ नान्येऽतस्त्वत्प्रिया एव विरूपासो दिवस्परि ॥ ५८ ॥ देवानां नु वशे योऽस्य सुमङ्गलीरियं वधूः ॥ स्नेहेषु त्वच्युतो भोगी प्रतिबन्धेषु बध्यते ॥ ५९ ॥ विहितं सर्वमित्ते त्वमतो ज्यायांश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ६० ॥ हये जाये इति वदन्त्या सालावृकहृत्समा ॥ तन्मयो न स वेदासु-मात्मानं तव पूरुष ॥ ६१ ॥ उभा उपाधितोऽग्नैकः पाकेन मनसा-न्वितः ॥ त्वां यदीक्षेत तं माता रेहूळि स उ रेहूळि मातरम् ॥ ६२ ॥ तदिदात्मन्हृदि वपुः पश्यन्तस्ते मनीषया ॥ मुनयो वातरशनाः पिशङ्गा वसतेऽमलाः ॥ ६३ ॥ त्वं चिन्मयं बुधा रूपं संजानाना उपासते ॥ यो अस्य पारे रजसः स नः पर्षदति द्विषः । ॥ ६४ ॥ इषे त्वोर्जे चौदनेन नित्यहोमेऽपि गव्यतः ॥ यजन्त्यहं त्वकामस्त्वां श्रेष्ठतमाय कर्मणे ॥ ६५ ॥ अग्न आयाहीति गातुं त्वाऽक्षमः स्तौमि केवलम् ॥ निषीद मे हृदि यथा निहोता सत्सि बर्हिषि ॥ ६६ ॥ शं नो देवीः प्रसादात्ते सन्तु धीवृत्तयोऽनिशम् ॥ आत्मप्रवाहाः स्वारस्याच्छंयोरभिस्रवन्तु नः ॥ ६७ ॥ ज्ञातेऽस्मिन्पाश-मुक्तिः सकलविदिति तत्स्यादनिर्देश्यमेकं सूक्ष्मं चातीन्द्रियं सत्तदय-मिति गिराशाब्दनिर्देश्यमेव ॥ वाक्यैस्तत्त्वं विरोधेऽपि सति सुमतिभिः सोऽयमित्यादिवत्तद्भागत्यागेन लक्ष्यं वरगुरुकृपया लभ्यमैक्यं हि तज्ज्ञैः ॥ ६८ ॥ इति श्रीदत्तवेदपादस्तुतिः समाप्ता ॥

## २६४. श्रीमहावाक्यार्थबोधः ।

श्रीगणेशाय नमः ॥ त्वामग्ने रविचन्द्रादेर्भासकं लोकचालकम् । पृच्छामीदं कथं ज्ञानमाप्नुयां दयया वद ॥ १ ॥ इति पृष्टोऽर्जुनेनाह

श्रीदत्तः श्रृणु भूपते। यदेकं परमं ब्रह्म नित्यमुक्तमविक्रियम् ॥ २ ॥ तत्स्वशक्तिसमाविष्टमीशमाहुर्मनीषिणः। स विष्णुः स शिवो ब्रह्मा सोऽग्निरिन्द्रः स्वराड् हरिः ॥ ३ ॥ धाता कालः क्रिया कर्ता जीवनं मृत्युरामयः। नारायणो हृषीकेशो भूतं भव्यं भवच्च सः ॥ ४ ॥ वस्तुमात्रमिदं सर्वमहमेवास्मि सर्वदृक्। अहमेव परं ध्येयं मिथ्याभ्रमनिवृत्तये ॥ ५ ॥ भ्रमस्यापि च नामानि कल्पितानि श्रृणुष्व तत्। मायाविद्या परा देवी मनोऽनादिर्भ्रमस्त्रिवृत् ॥ ६ ॥ प्रधानं प्रकृतिर्ब्रह्म योनिः शक्तिश्च कारणम्। मोहोऽध्यासस्तमोऽज्ञानं प्रस्वापः कारणं त्विदम् ॥ ७ ॥ अतोऽविद्या पञ्चपर्वा महामोहो द्विरूपकः। विक्षेपावृतिशक्त्याख्य आद्यात्सर्गोऽत्र भौतिकः ॥ ८ ॥ स्वरूपमावृणोत्यन्यो मुक्तं चेदं विना भृशम्। योऽविद्यार्तोऽवशो दुःखी भ्रान्तोऽज्ञो जीव एव सः ॥ ९ ॥ समष्टिरीशः सर्वज्ञो वशमायः स्वराट् सुखः। असत्वाभानाख्यभक्तावृतिहृद्गुरुरप्यसौ ॥ १० ॥ मतं मूढैर्जगन्नित्यं तथा जीवेशयोर्भिदा। एवं भेदत्रयेणेदं भातं वस्त्वेव मायया ॥ ११ ॥ तन्निवृत्त्यै कृता वेदैः सृष्टिप्रलयकल्पना। मूढस्य सा मता सत्या भ्रमोऽयं लीयते विदा ॥ १२ ॥ ज्ञानं विद्येति तां प्राहुर्द्वेधा विद्या विचारजा। परोक्षा चापरोक्षेति तत्राद्या गुरुवक्त्रतः ॥ १३ ॥ अमानित्वादियुक्तैः सा विज्ञेया साधनान्वितैः। गुरुभक्तिं विना सापि दुर्लभा मोक्षदायिनी ॥ १४ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥१५॥ गुर्वनुग्रहमात्रेण विचारः सुलभो नृणाम्। विचारेण परं तत्त्वं स्वयमेव प्रकाशते ॥ १६ ॥ राजंस्त्वयाखिलं कर्म योगयागादिकं मयि। समर्पितं ततोऽयं ते विचारोऽद्य समुत्थितः ॥ १७ ॥ वैराग्यं परमं जातं भ्रममोहमलापहम्। अतो विद्याप्रसादस्ते भविष्य-

त्यचिरेण हि ॥ १८ ॥ विद्या ज्ञेया परोक्षेयं वेदान्तश्रवणात्मिका । उपक्रमादिभिर्लिङ्गैर्यत्तात्पर्यावधारणम् ॥ १९ ॥ तदेव श्रवणं तत्तु हरेत्संशयभावनाम् । असत्त्वावरणं चापि वस्त्वस्तीति तदेक्षते ॥ २० ॥ मननं कार्यमस्येदमाश्वसंभावनाहरम् । वशीकाराख्यवैराग्ययुक्तस्येदं सुखावहम् ॥ २१ ॥ आत्मैव नेह नानास्ति मोहितस्य जगत्त्विदम् । भाति नान्यस्य मिथ्येदं स्वप्नो निद्रागमे यथा ॥ २२ ॥ विषयान्ध्यायतो यद्वन्मनोरथपरम्परा । असत्येव सदा भाति नानाविषयगोचरा ॥ २३ ॥ परमात्मैक एवाहं वस्तुमात्रश्चिदात्मकः । मयि मिथ्याविभागोऽयं दृश्यतेऽनाद्यविद्यया ॥ २४ ॥ भ्रमो मोहो महामाया प्रधानं प्रकृतिर्मनः । अज्ञानं शक्तिरव्यक्तं गुणसाम्यमितीरिता ॥ २५ ॥ सैव मिथ्यामतिर्यस्या इदं भातं चराचरम् । एवं विचारश्रवणानुसारि मननं तु तत् ॥ २६ ॥ सच्चिदानन्दलक्ष्मापि परात्मा माययाऽवृतः । निजं स्वरूपं विस्मृत्य ययेदं दृश्यते जगत् ॥ २७ ॥ महांस्ततोऽहमस्तस्मात्तन्मात्राणि ततः क्रमात् । भूतेन्द्रियसुराणां च सर्गरुयामाऽहमः क्रमात् ॥ २८ ॥ न ह्यत्र नियमो राजन्नसत्ये मानसभ्रमे । कदाचिद्युगपत्सृष्टिः क्रमसृष्टिः कदाचन ॥ २९ ॥ देहाः सुरासुरनरतिरश्चां भौतिका इमे । स्थूलैः स्थूलानि सूक्ष्मैश्च सूक्ष्माण्येवं भवोद्भवः ॥ ३० ॥ उपक्रमोऽयमाख्यात उपसंहार उच्यते । भूतेषु भौतिकानीह क्रमाद्योगी विलापयेत् ॥ ३१ ॥ पृथ्वी जले जलं वह्नौ वह्निर्वायौ स खे च खम् । अहमि प्राणगो देवा मनश्चापि स्वकारणे ॥ ३२ ॥ अहंकारोऽपि महति सोऽव्यक्ते तच्च निष्कले । स एवाहं परात्मैकः शुद्धो मुक्त उपाधितः ॥ ३३ ॥ एवं निदिध्यासनत एकः स्वात्मैव शिष्यते । तस्मान्नास्त्यपरं किंचिदात्मैवायं यथा तथा ॥ ३४ ॥ राजन्मम प्रसादात्त्वं खलु धन्योऽस्यसंशयम् । अन्तःकरणशुद्धिस्ते जाता

वैराग्यमुत्तमम् ॥ ३५ ॥ मयि भक्तिर्दृढा प्रेम्णा श्रवणं चापि विस्त-
रात् । प्रपञ्चस्यापि चित्तस्था सर्वथा विलयं गता ॥ ३६ ॥ तत्त्वमेकं
परं ब्रह्म न द्वितीयं कदापि हि । एवं शमादिरूपां तामारूढो भव
भूमिकाम् ॥ ३७ ॥ त्वं साक्षात्कारसूपायक्रमं विद्ध्यथ भूपते ।
दत्तचित्तो भवाद्यात्र तत्त्वनिश्चयकारक ॥ ३८ ॥ सर्वसाधनसंपन्नः
पुरुषो जातनिश्चयः । श्रोत्रियं ब्रह्मनिष्ठं तं सद्गुरुं शरणं व्रजेत् ॥ ३९ ॥
तत्त्वमस्यादिवाक्यार्थमुपदिष्टं तु षड्विधैः । लिङ्गैर्धिया समालोच्य बुधः
समवधारयेत् ॥ ४० ॥ श्रवणं त्विदमेवोक्तं तत्समासेन ते ब्रुवे ।
यतस्त्वं शिष्यतां प्राप्तो मत्सेवाहतकिल्बिषः ॥ ४१ ॥ तत्पदेन परं
ब्रह्म त्वंपदेन च पूरुषम् । अनूद्यैक्यं तयोर्भूप बोध्यतेऽसिपदेन
सत् ॥ ४२ ॥ विरुद्धस्य त्वमर्थस्य तदर्थत्वं कथं भवेत् । इति चेच्छृणु
राजेन्द्र तयोरैक्ये निदर्शनम् ॥ ४३ ॥ देवदत्तः क्वचिद्दृष्टो युवा
देशान्तरे स च । पुनर्दृष्टो जरां प्राप्तः सोऽयमित्यवधार्यते ॥ ४४ ॥
पूर्वदेशमवस्थां च त्यक्त्वेदं तस्य वार्द्धकम् । देशं चापि यथैकेन
पिण्डेनैक्यं प्रतीयते ॥ ४५ ॥ त्यक्त्वा द्व्यंशौ तथाऽत्रापि वाक्य ऐक्यं
हि लक्ष्यते ॥ त्वंपदस्य च वाच्यार्थः संसारीति सुनिश्चितः ॥ ४६ ॥
कर्ता भोक्ता सुखी दुःखी माययव न तत्त्वतः ॥ देहेन्द्रियमनःप्राणाहं-
कारेभ्यो विलक्षणः ॥ ४७ ॥ वस्तुतः सच्चिदानन्दस्वरूपो गुणगो-
चरः ॥ एकांशस्तत्र चिद्रूपमन्यः संसारिताऽस्य च ॥ ४८ ॥ एवं
त्वमर्थं निश्चित्य तदर्थमपि निश्चिनु ॥ अतद्व्यावृत्त्या विधिना साक्षाच्च
श्रुतियुक्तितः ॥ ४९ ॥ तत्पदस्य च वाच्यार्थः सर्वज्ञः परमेश्वरः ॥
तस्यैकोंऽशोऽपि चिद्रूपं सर्वज्ञत्वादि चापरः ॥ ५० ॥ त्यक्त्वा विरुद्ध-
वाच्यांशद्वयं जीवेशयोरिह ॥ लक्ष्यौ चिदंशौ निर्बाधं पदयोरुभयो-
रपि ॥ ५१ ॥ अविरुद्धं तयोरैक्यं लक्षणालक्षितं द्वयोः ॥ वाक्यार्थोऽयं

सुनिष्पन्नस्त्वं ब्रह्म परमं हि तत् ॥ ५२ ॥ तदेव त्वं परं ब्रह्म नास्ति भेदः कथंचन ॥ अखण्डैकरसत्वेन वाक्यार्थोऽत्र सतां मतः ॥ ५३ ॥ विशेष्यं त्वंपदं तस्य तत्पदं च विशेषणम् ॥ निरस्यतेऽस्य दुःखित्वं सुखित्वं च विधीयते ॥ ५४ ॥ वैपरीत्येन विज्ञेयं विशेष्यं तत्पदं तथा ॥ विशेषणं त्वंपदं च पारोक्ष्यस्य निरासकृत् ॥ ५५ ॥ तद्ब्रह्म परमं शुद्धं त्वमात्मैव निरामयः ॥ इत्यैक्यं भूप विज्ञेयं वेदोक्तं गुर्वनुग्रहात् ॥ ५६ ॥ स्वात्मैक्यार्थमियं प्रोक्ता सुधीभिर्भागलक्षणा ॥ त्रिकाण्डेनापि वेदेन सोऽयमर्थो विनिश्चितः ॥ ५७ ॥ स्थूलधीभिः सुदुर्ज्ञेयो विज्ञेयो हि मनीषिभिः ॥ पर्यवस्यन्ति वेदाद्या अत्रैव विविधा अपि ॥ ५८ ॥ शास्त्रतत्त्वमविज्ञाय मूढाः शास्त्राणि सर्वशः ॥ ते प्रवृत्तिपराण्येव कथयन्ति कुतर्कतः ॥ ५९ ॥ उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ॥ अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ ६० ॥ प्राक् सदेवेत्युपक्रम्यैतदात्म्यमिदमेव सत् ॥ उपसंहृतमित्येकमभ्यासो नवधा परम् ॥ ६१ ॥ शाब्देनैव ह्यखण्डार्थविनयत्वं तृतीयकम् ॥ तुर्यं विदेहकैवल्यं प्रारब्धान्ते विवेकिनः ॥ ६२ ॥ षष्ठं मृदादिदृष्टान्तैर्निर्णयस्तूपपत्तिकम् ॥ सृष्टिस्थित्यन्तप्रवेशानियमः शोधनं फलम् ॥ ६३ ॥ सप्तार्थवादास्तद्रूपं पञ्चमं लिङ्गमुच्यते ॥ सर्वस्यात्मन उत्पत्तेरवस्थानाच्च तत्र हि ॥ ६४ ॥ पुनर्लयाज्जगौ वेदः कारणब्रह्ममात्रताम् ॥ सूर्यस्येव जले चात्र प्रवेशमपि चात्र तु ॥ ६५ ॥ अन्तर्यामितया भेदात्सदा नियमनं स्मृतम् ॥ तथा रोहितरूपाद्यैः पदार्थपरिशोधनम् ॥ ६६ ॥ अभेदज्ञानस्य परं स्वात्मैक्यममृतं फलम् ॥ एवं सप्तार्थवादात्मलक्षणं पञ्चमं मतम् ॥ ६७ ॥ षड्लिङ्गैरिति तात्पर्यावधृतिः श्रवणं स्मृतम् ॥ आस्थायाथो योगभूमिं मननादि चरेद्बुधः ॥ ६८ ॥ इति दत्तपुराणे श्रीमहावाक्यार्थबोधः संपूर्णः ॥

## ३६५. दत्तात्रेयभक्तिनिरूपणस्तोत्रम् ।

श्रीगणेशाय नमः ॥ प्रयतेः सुलभो भक्त्याऽयमात्मा पुरुषः परः । इति वेदादिनोक्तं तद्भक्तिर्मुख्याऽधुनोच्यते ॥ १ ॥ निर्विकल्पं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मंदास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ २ ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ ३ ॥ इत्युक्तेर्नवधा भक्तिर्वाच्यात्र स्मरणात्मिका । श्रेष्ठाऽर्थ्यान्यत्र च व्याप्ता हृच्छुद्ध्यास्य पदप्रदा ॥ ४ ॥ सहस्राङ्गात्मकर्माख्यभगवत्स्मरणात्सदा । कृतं कर्माप्यकर्मैव येनैष द्राग्विमुच्यते ॥ ५ ॥ कृत्वेश्वरे परां भक्तिं भगवत्कीर्तनादपि । सद्भक्तो मायिकं पाशं छित्त्वा याति स सद्गतिम् ॥ ६ ॥ तद्गुणश्रवणाच्चापि श्रद्धावानबहिर्मुखः । समाहितोऽनसूयुर्ना क्षिप्रं नैष्कर्म्यसिद्धिभाक् ॥ ७ ॥ वज्राङ्कुशध्वजाब्जाङ्कभगवत्पादसेवनात् । भित्त्वा मायावृतिं सत्त्वशुद्धो याति परं पदम् ॥ ८ ॥ जलेष्टास्त्रं कनिष्ठिक्या लिखित्वा तारमन्तरे । पत्रेष्वष्टाक्षरं चैकं हृत्स्थमावाह्य तत्र षट् ॥ ९ ॥ प्रदर्श्य मुद्रा ऋष्यादीन्स्मृत्वा विन्यस्य चोंकृतेः । मात्राः शाखाङ्गेषु भूखवाताग्न्यब्बीजतो हृदा ॥ १० ॥ दत्त्वोपचारान् गन्धादीन् जपित्वाऽष्टसहस्रकम् । तर्पयित्वा चाष्टशतमृष्यादीनेकवारतः ॥ ११ ॥ पुनः संपूज्य विन्यस्य तं स्वात्मन्युद्वसेत्परम् । त्रिसंध्यमर्चनं त्वेवं यतेरन्यस्य चोच्यते ॥ १२ ॥ लब्ध्वा पूर्वं स्वगृह्योक्तं द्विजत्वं भक्तिमान्शुचिः । ज्ञात्वा धनर्णसिद्धारिचक्रासिद्धं मनुं गुरोः ॥ १३ ॥ लब्ध्वाऽर्णसंख्यालक्षां प्राक् पुरश्चर्यां यथाविधि । कृत्वाऽनेनार्चयेदर्चां नियतो नित्यकर्मकृत् ॥ १४ ॥ लौहीं वा संस्कृतां शैलीं विभोः साङ्गां सलक्षणाम् । सोऽपि लब्ध्वाखिलान्कामान् देहान्ते तन्मयो भवेत् ॥ १५ ॥ पुरा नारायणं ब्रह्मा सत्यक्षेत्रे दया-

निधिम् । प्रणतोऽपृच्छदेकं किमुपास्यं दैवतं परम् ॥ १६ ॥ स प्राह मामकं धाम यद्दत्तात्रेयसंज्ञितम् । सदानन्दात्मकं शुद्धं सात्त्विकं तारकं परम् ॥ १७ ॥ विश्वरूपं जगद्योनिं तदेकोपास्स्व दैवतम् । लकारं वह्निसंयुक्तं सतुण्डाक्षरबिन्दुकम् ॥ १८ ॥ तदर्चने मनुं विद्धि छन्दो गायत्रिकास्य च । सदाशिवऋषिर्देवो दत्तात्रेयश्चतुर्भुजः ॥ १९ ॥ मनुरेकाक्षरोऽस्यायं जाप्यो गर्भादितारणः । तारः श्रीदुर्गा क्रों भूमिदत्तैकाक्षरयुङ्मनुः ॥ २० ॥ षडक्षरो योगदोऽयं सर्वसंपत्समृद्धिकृत् । ऋष्यादिः पूर्ववन्न्यासो बीजैः शाखाहृदादिषु ॥ २१ ॥ दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं विभुम् । आत्ममायारतं देवमवधूतं दिगम्बरम् ॥ २२ ॥ भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् । चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ॥ २३ ॥ ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ॥ भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम् ॥ २४ ॥ इत्यौपनिषदं दत्तं ध्यात्वैकाग्र्यं मनुं जपेत् । स वाञ्छितफलं भुक्त्वा परत्र श्रेय आप्नुयात् ॥ २५ ॥ सैकाक्षरं चतुर्थ्यन्तं दत्तात्रेयं नमोन्वितम् । अष्टार्णमन्त्रं गायत्रं विद्धि द्रां बीजमस्य तु ॥ २६ ॥ चतुर्थी कीलकं शक्तिर्नम आर्षः सदाशिवः । दत्तात्रेयपदस्यार्थः सत्यानन्दचिदात्मकः ॥ २७ ॥ प्रह्वीभावो नमोर्थस्तु पूर्णानन्दैकविग्रहः । तारं सबिन्दुं तुण्डार्णं दुर्गां क्रों तुर्यमेहि च ॥ २८ ॥ दत्तात्रेयेति संबुद्ध्या स्वाहान्तं द्वादशाक्षरम् । सर्वकामदुघं विद्धि गायत्रं भो शिवार्षकम् ॥ २९ ॥ वराभयदहस्तं यो भजेदाभ्यां महाव्रतः । सर्वान्कामानिहैवाप्त्वा सोऽमृतो भवति ध्रुवम् ॥ ३० ॥ ॐ बीजं स्वाहात्र शक्तिः संबुद्धिः कीलकं क्रमात् । द्वाभ्यां हृदि च के द्वाभ्यां शिखायां क्रियया न्यसेत् ॥ ३१ ॥ संबुद्धिभ्यां स्कन्धचक्षुर्द्वयेस्त्रेऽन्त्येन तन्मयः । चतुर्बीजैः सक्रियाख्या-

न्याभ्यां करादिषु ॥ ३२ ॥ कृत्वा यजेद्देवदेवं यत्रन्यस्तमभीष्टदम् । दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ॥ ३३ ॥ दिगम्बर मुने बाल पिशाचज्ञानसागर । आनुष्टुभः शिवार्षोऽयं षड्भुजात्रेयदैवतः ॥३४॥ द्वाभ्यां द्वाभ्यां हृच्छिरसोः शिखायामेकतो गले । द्वाभ्यामेकैकेन दोर्द्दग्द्वये द्वाभ्यां तथास्त्रके ॥ ३५ ॥ विन्यस्य जपिता दोषमुक्ता सर्वोपकारकृत् । तारं वायुं क्लां कामं क्लुं ह्रां दुर्गां हूं च विद्धि सौः ॥ ३६ ॥ दत्तात्रेयं चतुर्थ्यन्तं स्वाहान्तं षोडशाक्षरम् । वायुस्थाने तु वाग्बीजं नमोऽन्ते योजयाथवा ॥ ३७ ॥ स्वाहैकत्र नमोऽन्यत्र शक्तिर्बीजं च कीलकम् । तारश्चतुर्थी गायत्री मंत्रराजः शिवोदितः ॥ ३८ ॥ हृदि द्वे के त्रीणि शिखायां चैकं कवचे दृशोः । चतुर्थीमन्त्यमस्त्रे च विन्यस्य जपकामदम् ॥ ३९ ॥ सच्चिदानन्दस्वरूपी सुखी मुक्तो भवत्यतः । सिद्धगन्धर्वादिसङ्गी लक्षजाप्यष्टसिद्धिभाक् ॥ ४० ॥ त्रिदेवलोकसंचारी कोटिजापि च दत्तवत् । दशकोटिजपी साक्षाज्जरामरणवर्जितः ॥ ४१ ॥ द्व्यष्टकोटिजपी सिद्धः परकायगतादिकृत् । मन्त्रशक्तिरियं श्लोका अभिगीता इहाप्यमी ॥ ४२ ॥ खड्गस्तम्भो जलस्तम्भः सेनास्तम्भस्तथैव च । इच्छासिद्धिर्वशित्वं च दिक्पालैः सह भाषणम् ॥ ४३ ॥ वायुवद्गतिरित्याहुराह्लादित्वं च चन्द्रवत् । अग्निवत्सर्वभक्षत्वं नित्यतृप्तत्वमेव च ॥ ४४ ॥ सर्वभाषापरिज्ञानं सर्वचित्तावबोधनम् । वापीकूपसमुद्राणां पर्वतानां च चालनम् ॥ ४५ ॥ दत्तात्रेयमयः स्वच्छो भवेत्स व्यासवत्कविः । इतीदं षोडशार्णस्य माहात्म्यं तत्प्रयत्नतः ॥ ४६ ॥ प्राणो देयो मनश्चक्षुश्छित्त्वा देयं शिरो वपुः । न देयः षोडशार्णोऽसौ सच्छिष्याय महात्मने ॥ ४७ ॥ महागुणव्रते देयः कुप्येत प्रभुरन्यथा । मालाकमण्डलत्वाधस्त्रिशूले शङ्खचक्रके ॥ ४८ ॥ दधानमत्रिवरदं दत्तात्रेयं त्र्यधीश्वरम् । ध्यात्वेत्थं

विधिवन्मन्त्रजाप्युक्तफलभाग्भवेत् ॥ ४९ ॥ ॐ नमो भगवान्दत्तात्रेयः स्मरणमात्रसंतुष्टो महाभयनिवारणो महाज्ञानप्रदः ॥ ५० ॥ चिदानन्दात्मा बालोन्मत्तपिशाचवेषो महायोग्यवधूतोऽनसूयानन्दवर्धनोऽत्रिपुत्रः ॥ ५१ ॥ ॐ भवबन्धविमोचनो ह्रीं सर्वभूतिदः क्रों असाध्याकर्षण ऐं वाक्प्रदः ॥ ५२ ॥ क्लींजगत्त्रयवशीकरणः सौः सर्वमनःक्षोभणः श्रींमहासंपत्प्रदो ग्लौं भूमण्डलाधिपत्यप्रदः ॥ ५३ ॥ द्रां चिरजीवी वषड्वशीकुरु वौषडाकर्षय हुं विद्वेषय फडुच्चाटय ठः ठः ॥ ५४ ॥ स्तम्भय खें खें मारय नमः संपन्नय स्वाहा पोषय परमन्त्रपरयन्त्रपरतन्त्राणि ॥ ५५ ॥ छिन्धि ग्रहान्निवारय व्याधीन्विनाशय दुःखं हर दारिद्र्यं विद्रावय देहं पोषय ॥ ५६ ॥ चित्तं तोषय सर्वमन्त्रस्वरूपः सर्वतन्त्रस्वरूपः सर्वपल्लवस्वरूपः ॥ ५७ ॥ ॐ नमो महासिद्धः स्वाहान्तो मालामन्त्रः । प्रथमान्तां चतुर्थ्या द्विः क्रियाश्च व्याहरेत् ॥ ५८ ॥ विष्णुनोक्ता इमे मन्त्रा ब्रह्मणे कामधेनवः । प्रयोगग्रहभूतारिकुद्दग्रुक्तापभीतिहाः ॥ ५९ ॥ कामिनोऽभीष्टफलदा देवसांनिध्यकारकाः । तद्वच्च वज्रकवचं दत्तनामसहस्रकम् ॥ ६० ॥ एषामन्यतमेनेशं यो वैदिकविधानतः । उपास्ते चित्तशुद्ध्या स मुच्यतेऽत्र परत्र वा ॥ ६१ ॥ दत्तात्रेयनिवासं तदाचण्डालश्वगोखरम् । ब्रह्मादिस्तम्बपर्यन्तं समदृक् प्रणमेत्सुधीः ॥ ६२ ॥ चालको भासकोऽस्त्येषां सच्चिदात्मा स्वयंप्रभः । अस्ति भाति प्रियत्वेन भगवानेव नापरः ॥ ६३ ॥ यथाधिपे वशा भृत्या निर्माना ईश्वरे तथा । विदध्यात्स्वामनो दास्यं निरीहं द्वैतदर्शने ॥ ६४ ॥ सख्योः सख्यं यथा लोके निरीपेक्षं तथात्मनः । परात्मनापि सततं समाधेः प्राक् प्रकल्पयेत् ॥ ६५ ॥ कर्तृत्वादि न मय्येके शुद्धे देहादिसाक्षिणि । इतीक्षणमसंदिग्धं सर्वस्वात्मनिवेदनम् ॥ ६६ ॥ अतीत्य वरदेशादीन् काश्यां

संतोष्य दीपकः । वेदधर्मगुरुं रुग्णं कष्टेन हि महामतिः ॥ ६७ ॥ श्रीदत्तलीलाश्रवणं नयाचे तुष्ट एव सः । गुरुः शिष्याय यत्प्राह मुक्त्यै तत्सार उच्यते ॥ ६८ ॥ इति श्रीदत्तात्रेयभक्तिनिरूपणस्तोत्रं संपूर्णम् ॥

## ३६६. गुरुवरप्रार्थनापंचरत्नस्तोत्रम् ।

श्रीगणेशाय नमः ॥ यं विज्ञातुं भृगुर्यः स्वापितरमुपगतः पंचवारं यथावज्ज्ञादेवामृतासेः सततमनुपमं चिद्विवेकादि लब्ध्वा । तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानंदमुक्तानंताद्वैतप्रतीते म कुरु कितवतां पाहि मां दीनबंधो ॥ १ ॥ यस्माद्दृश्यस्य जन्मस्थितिविलयमिमे तैत्तिरीयाः पठंति स्वाविद्यामात्रयोगात्सुखशयनतले मुख्यतः स्वप्नवच्च । तस्मै० ॥ २ ॥ यो वेदांतैकलभ्यः श्रुतिषु नियमितस्तैत्तिरीयैश्च काण्वैरन्यैरप्यानिषेकादुदयपरिमितं चारुसंस्कारभाजाम् । तस्मै० ॥ ३ ॥ यस्मिन्नवावसन्नाः सकलनिगमवाङ्मौलयः सुप्तपुंसि प्रोक्तं तन्नाम यद्वन्निजमहिमगतध्वांततत्कार्यरूपे । तस्मै० ॥ ४ ॥ चित्त्वात्संकल्पपूर्वं सृजति जगदिदं योगिवन्मायया यः स्वात्मन्येवाद्वितीये परमसुखदृशि स्वप्नवद्भून्नि नित्ये । तस्मै० ॥ ५ ॥ इत्यच्युतविरचितं गुरुवरप्रार्थनापंचरत्नस्तोत्रं संपूर्णम् ॥

## ३६७. दक्षिणामूर्तिस्तोत्रम् ।

श्रीगणेशाय नमः ॥ विश्वं दर्पणदृश्यमाननगरीतुल्यं निजांतर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया । यः साक्षी कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १ ॥ बीजस्यांतरिवांकुरो जगदिदं प्राङ्निर्विकल्पं पुनर्मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् । मायावीव विजृंभयत्यपि महायोगीव यः स्वेच्छया तस्मै श्रीगुरु० ॥ २ ॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् । यत्साक्षात्करणाद्भवेन्न पुनरावृत्ति-र्भवांभोनिधौ तस्मै श्रीगुरु० ॥ ३ ॥ नानाच्छिद्रघटोदरस्थितमहादीप-प्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पंदते । जानामीति तमेव भांतमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरु० ॥ ४ ॥ देहप्राणमपींद्रियाण्यपि चलां बुद्धिं च शून्यं विदुः स्त्रीबालांधजडोप-मास्त्वहमिति भ्रांता भृशं वादिनः । मायाशक्तिविलासकल्पितमहा-व्यामोहसंहारिणे तस्मै श्रीगुरु० ॥ ५ ॥ राहुग्रस्तदिवाकरेंदुसदृशो मायासमाच्छादनात्सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् । प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्रीगुरु० ॥ ६ ॥ बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमा-नमहमित्यंतः स्फुरंतं सदा । स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया तस्मै श्रीगु० ॥ ७ ॥ विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबंधतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः । स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितस्तस्मै श्रीगुरु० ॥८॥ भूरम्भांस्यनलोऽनि-लोंऽबरमहर्नाथोहिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टम् । नान्यत्किंचन विद्यते विमृशतां यस्मात्परस्माद्विभोस्तस्मै श्रीगुरु० ॥ ९ ॥ सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन्स्तवे तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च संकीर्तनात् । सर्वात्मत्वमहावि-भूतिसहितं स्यादीश्वरत्वं स्वतः सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्या-हतम् ॥ १० ॥ वटविटपिसमीपे भूमिभागे निषण्णं सकलमुनिजनानां ज्ञानदातारमारात् । त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं जननमरण-दुःखच्छेददक्षं नमामि ॥ ११ ॥ चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा । गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥ १२ ॥

ॐ नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये । निर्मलाय प्रशांताय दक्षिणामूर्तये नमः ॥ १३ ॥ निधये सर्वविद्यानां भिषजे भवरोगिणाम् । गुरवे सर्वलोकानां दक्षिणामूर्तये नमः ॥ १४ ॥ मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं वर्षिष्ठांतेवसदृषिगणैरावृतं ब्रह्मनिष्ठैः । आचार्येन्द्रं करकलितचिन्मुद्रमानंदरूपं स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥ १५ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकराचार्यविरचितं दक्षिणामूर्तिस्तोत्रं संपूर्णम् ॥

## २६८. श्रीदत्तात्रेयवज्रकवचम् ।

श्रीगणेशाय नमः ॥ श्रीदत्तात्रेयाय नमः ॥ ऋषयः ऊचुः ॥ कथं संकल्पसिद्धिः स्याद्वेदव्यास कलौ युगे । धर्मार्थकाममोक्षाणां साधनं किमुदाहृतम् ॥ १ ॥ व्यास उवाच ॥ शृण्वन्तु ऋषयः सर्वे शीघ्रं संकल्पसाधनम् । सकृदुच्चारमात्रेण भोगमोक्षप्रदायकम् ॥ २ ॥ गौरीशृंगे हिमवतः कल्पवृक्षोपशोभितम् । दीप्ते दिव्यमहारत्नहेममंडपमध्यगम् ॥ ३ ॥ रत्नसिंहासनासीनं प्रसन्नं परमेश्वरम् । मंदस्मितमुखांभोजं शंकरं प्राह पार्वती ॥ ४ ॥ श्रीदेव्युवाच ॥ देवदेव महादेव लोकशंकर शंकर । मंत्रजालानि सर्वाणि यंत्रजालानि कृत्स्नशः ॥ ५ ॥ तंत्रजालान्यनेकानि मया त्वत्तः श्रुतानि वै । इदानीं द्रष्टुमिच्छामि विशेषेण महीतलम् ॥ ६ ॥ इत्युदीरितमाकर्ण्य पार्वत्या परमेश्वरः । करेणामृज्य संतोषात्पार्वतीं प्रत्यभाषत ॥ ७ ॥ मयेदानीं त्वया सार्धं वृषमारुह्य गम्यते । इत्युक्त्वा वृषमारुह्य पार्वत्या सह शंकरः ॥ ८ ॥ ययौ भूमंडलं द्रष्टुं गौर्याश्चित्राणि दर्शयन् । क्वचित् विंध्याचलप्रान्ते महारण्ये सुदुर्गमे ॥ ९ ॥ तत्र व्याहर्तुमायान्तं भिल्लं परशुधारिणम् । वर्ध्यमानं महाव्याघ्रं नखदंष्ट्राभिरावृतम् ॥ १० ॥ अतीव चित्रचारित्र्यं वज्रकायसमायुतम् । अप्रयत्नमनायासमखिलं

सुखमास्थितम् ॥ ११ ॥ पलायन्तं मृगं पश्चाद्व्याघ्रो भीत्या पलायितः। एतदाश्चर्यमालोक्य पार्वती प्राह शंकरम् ॥ १२ ॥ श्रीपार्वत्युवाच ॥ किमाश्चर्यं किमाश्चर्यमग्रे शंभो निरीक्ष्यताम्। इत्युक्तः स ततः शंभुर्दृष्ट्वा प्राह पुराणवित् ॥ १३ ॥ श्रीशंकर उवाच ॥ गौरि वक्ष्यामि ते चित्रमवाङ्मानसगोचरम्। अदृष्टपूर्वमस्माभिर्नास्ति किंचिन्न कुत्रचित् ॥ १४ ॥ मया सम्यक् समासेन वक्ष्यते शृणु पार्वति। अयं दूरश्रवा नाम भिल्लः परमधार्मिकः ॥ १५ ॥ समित्कुशप्रसूनानि कंदमूलफलादिकम्। प्रत्यहं विपिनं गत्वा समादाय प्रयासतः ॥ १६ ॥ प्रिये पूर्वं मुनींद्रेभ्यः प्रयच्छति न वांछति। तेऽपि तस्मिन्नपि दयां कुर्वते सर्वमौनिनः ॥ १७ ॥ दलादनो महायोगी वसन्नेव निजाश्रमे। कदाचिदस्मरत् सिद्धं दत्तात्रेयं दिगम्बरम् ॥ १८ ॥ दत्तात्रेयः स्मर्तृगामी चेतिहासं परीक्षितुम्। तत्क्षणात्सोऽपि योगींद्रो दत्तात्रेयः समुत्थितः ॥ १९ ॥ तं दृष्ट्वाऽऽश्चर्यतोषाभ्यां दलादनमहामुनिः। संपूज्याग्रे निषीदन्तं दत्तात्रेयमुवाच तम् ॥ २० ॥ मयोपहूतः संप्राप्तो दत्तात्रेय महामुने। स्मर्तृगामी त्वमित्येतत् किंवदन्ती परीक्षितुम् ॥ २१ ॥ मयाद्य संस्मृतोऽसि त्वमपराधं क्षमस्व मे। दत्तात्रेयो मुनिं प्राह मम प्रकृतिरीदृशी ॥ २२ ॥ अभक्त्या वा सुभक्त्या वा यः स्मरेन्मामनन्यधीः। तदानीं तमुपागत्य ददामि तदभीप्सितम् ॥ २३ ॥ दत्तात्रेयो मुनिं प्राह दलादनमुनीश्वरम्। यदिष्टं तद्वृणीष्व त्वं यत् प्राप्तोऽहं त्वया स्मृतः ॥ २४ ॥ दत्तात्रेयं मुनिः प्राह मया किमपि नोच्यते। त्वच्चित्ते यत्स्थितं तन्मे प्रयच्छ मुनिपुंगव ॥ २५ ॥ श्रीदत्तात्रेय उवाच ॥ ममास्ति वज्रकवचं गृहाणेत्यवदन्मुनिम्। तथेत्यंगीकृतवते दलादमुनये मुनिः ॥ २६ ॥ स्ववज्रकवचं प्राह

ऋषिच्छन्दःपुरःसरम् । न्यासं ध्यानं फलं तत्र प्रयोजनमशेषतः ॥ २७ ॥ अस्य श्रीदत्तात्रेयवज्रकवचस्तोत्रमंत्रस्य, किरातरूपी महारुद्र ऋषिः, अनुष्टुप् छन्दः, श्रीदत्तात्रेयो देवता, द्रां बीजम्, आं शक्तिः, क्रौं कीलकम्, ॐ आत्मने नमः ॥ ॐ द्रीं मनसे नमः ॥ ॐ आं द्रीं श्रीं सौः ॐ क्लां क्लीं क्लूं क्लैं क्लौं क्लः ॥ श्रीदत्तात्रेयप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ॐ द्रां अंगुष्ठाभ्यां नमः ॐ द्रीं तर्जनीभ्यां नमः ॥ ॐ द्रूं मध्यमाभ्यां नमः ॥ ॐ द्रैं अनामिकाभ्यां नमः ॥ ॐ द्रौं कनिष्ठिकाभ्यां नमः ॥ ॐ द्रः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ॥ ॐ भूर्भुवःस्वरोमिति दिग्बंधः ॥ अथ ध्यानम् ॥ जगदंकुरकंदाय सच्चिदानंदमूर्तये । दत्तात्रेयाय योगीन्द्रचन्द्राय परमात्मने ॥ १ ॥ कदा योगी कदा भोगी कदा नग्नः पिशाचवत् । दत्तात्रेयो हरिः साक्षाद्भुक्तिमुक्तिप्रदायकः ॥ २ ॥ वाराणसीपुरस्नायी कोल्हापुरजपादरः । माहुरीपुरभिक्षाशी सह्यशायी दिगंबरः ॥ ३ ॥ इन्द्रनीलसमाकारश्चन्द्रकांतिसमद्युतिः । वैडूर्यसदृशस्फूर्तिश्चलत्किंचिज्जटाधरः ॥ ४ ॥ स्निग्धधावल्ययुक्ताक्षोऽत्यंतनीलकनीनिकः । भ्रूवक्षःश्मश्रुनीलांकः शशांकसदृशाननः ॥ ५ ॥ हासनिर्जितनीहारः कंठनिर्जितकंबुकः । मांसलांसो दीर्घबाहुः पाणिनिर्जितपल्लवः ॥ ६ ॥ विशालपीनवक्षाश्च ताम्रपाणिर्दलोदरः । पृथुलश्रोणिललितो विशालजघनस्थलः ॥ ७ ॥ रंभास्तंभोपमानोरुर्जानुपूर्वैकजंघकः । गूढगुल्फः कूर्मपृष्ठो लसत्पादोपरिस्थलः ॥ ८ ॥ रक्तारविंदसदृशरमणीयपदाधरः । चर्माम्बरधरो योगी स्मर्तृगामी क्षणे क्षणे ॥ ९ ॥ ज्ञानोपदेशनिरतो विपद्धरणदीक्षितः । सिद्धासनसमासीन ऋजुकायो हसन्मुखः ॥ १० ॥ वामहस्तेन वरदो दक्षिणेनाभयंकरः । बालोन्मत्तपिशाचीभिः क्वचिद्युक्तः

परीक्षितः ॥ ११ ॥ त्यागी भोगी महायोगी नित्यानन्दो निरंजनः । सर्वरूपी सर्वदाता सर्वगः सर्वकामदः ॥ १२ ॥ भस्मोद्धूलितसर्वाङ्गो महापातकनाशनः । भुक्तिप्रदो मुक्तिदाता जीवन्मुक्तो न संशयः ॥ १३ ॥ एवं ध्यात्वाऽनन्यचित्तो मद्वज्रकवचं पठेत् । मामेव पश्यन्सर्वत्र स मया सह संचरेत् ॥ १४ ॥ दिगंबरं भस्मसुगंधलेपनं चक्रं त्रिशूलं डमरुं गदायुधम् । पद्मासनं योगिमुनीन्द्रवंदितं दत्तेति नामस्मरणेन नित्यम् ॥ १५ ॥ ( अथ पंचोपचारैः संपूज्य, ॐ द्राम् इति १०८ वारं जपेत् ) ॐ दत्तात्रेयः शिरः पातु सहस्राब्जेषु संस्थितः । भालं पात्वानसूयेयश्चंद्रमंडलमध्यगः ॥ १ ॥ कूर्चं मनोमयः पातु हं क्षं द्विदलपद्मभूः । ज्योतीरूपोऽक्षिणी पातु पातु शब्दात्मकः श्रुती ॥ २ ॥ नासिकां पातु गंधात्मा मुखं पातु रसात्मकः । जिह्वां वेदात्मकः पातु दंतोष्ठौ पातु धार्मिकः ॥ ३ ॥ कपोलावत्रिभूः पातु पात्वशेषं ममात्मवित् । स्वरात्मा षोडशाराब्जस्थितः स्वात्माऽवताद्गलम् ॥ ४ ॥ स्कन्धौ चन्द्रानुजः पातु भुजौ पातु कृतादिभूः । जत्रुणी शत्रुजित् पातु पातु वक्षःस्थलं हरिः ॥ ५ ॥ कादिठांतद्वादशारपद्मगो मरुदात्मकः । योगीश्वरेश्वरः पातु हृदयं हृदयस्थितः ॥ ६ ॥ पार्श्वे हरिः पार्श्ववर्ती पातु पार्श्वस्थितः स्मृतः । हठयोगादियोगज्ञः कुक्षी पातु कृपानिधिः ॥ ७ ॥ डकारादिफकारान्तदशारसरसीरुहे । नाभिस्थले वर्तमानो नाभिं वह्न्यात्मकोऽवतु ॥ ८ ॥ वह्नितत्त्वमयो योगी रक्षतान्मणिपूरकम् । कटिं कटिस्थब्रह्मांडवासुदेवात्मकोऽवतु ॥ ९ ॥ वकारादिलकारान्तषट्पत्रांबुजबोधकः । जलतत्त्वमयो योगी स्वाधिष्ठानं ममावतु ॥ १० ॥ सिद्धासनसमासीन ऊरू सिद्धेश्वरोऽवतु । वादिसांतचतुष्पत्रसरोरुहनिबोधकः ॥ ११ ॥

मूलाधारं महीरूपो रक्षताद्वीर्यनिग्रही । पृष्ठं च सर्वतः पातु जानुन्यस्तकरांबुजः ॥ १२ ॥ जंघे पात्ववधूतेंद्रः पात्वंघ्री तीर्थपावनः । सर्वांगं पातु सर्वात्मा रोमाण्यवतु केशवः ॥ १३ ॥ चर्म चर्मांबरः पातु रक्तं भक्तिप्रियोऽवतु । मांसं मांसकरः पातु मज्जां मज्जात्मकोऽवतु ॥ १४ ॥ अस्थीनि स्थिरधीः पायान्मेधां वेधाः प्रपालयेत् । शुक्रं सुखकरः पातु चित्तं पातु दृढाकृतिः ॥ १५ ॥ मनोबुद्धि। महंकारं हृषीकेशात्मकोऽवतु । कर्मेंद्रियाणि पात्वीशः पातु ज्ञानेंद्रियाण्यजः ॥ १६ ॥ बंधून् बंधूत्तमः पायाच्छत्रुभ्यः पातु शत्रुजित् : गृहारामधनक्षेत्रपुत्रादीञ्छंकरोऽवतु ॥ १७ ॥ भार्यां प्रकृतिवित् पातु पश्वादीन्पातु शार्ङ्गभृत् । प्राणान्पातु प्रधानज्ञो भक्ष्यादीन्पातु भास्करः ॥ १८ ॥ सुखं चंद्रात्मकः पातु दुःखात् पातु पुरांतकः । पशून्पशुपतिः पातु भूतिं भूतेश्वरो मम ॥ १९ ॥ प्राच्यां विषहरपातु पात्वाग्नेय्यां मखात्मकः । याम्यां धर्मात्मकः पातु नैर्ऋत्यां सर्ववैरिहृत् ॥ २० ॥ वराहः पातु वारुण्यां वायव्यां प्राणदोऽवतु । कौबेर्यां धनदः पातु पात्वैशान्यां महागुरुः ॥ २१ ॥ ऊर्ध्वं पातु महासिद्धः पात्वधस्ताज्जटाधरः । रक्षाहीनं तु यत्स्थानं रक्षत्वादिमुनीश्वरः ॥ २२ ॥ मालामंत्रजपः ॥ हृदयादिन्यासः ॥ एतन्मे वज्रकवचं यः पठेच्छृणुयादपि । वज्रकायश्चिरंजीवी दत्तात्रेयोऽहमब्रुवम् ॥ २३ ॥ त्यागी भोगी महायोगी सुखदुःखविवर्जितः । सर्वत्रसिद्धसंकल्पो जीवन्मुक्तोऽद्य वर्तते ॥ २४ ॥ इत्युक्त्वान्तर्दधे योगी दत्तात्रेयो दिगंबरः । दलादनोऽपि तज्जप्त्वा जीवन्मुक्तः स वर्तते ॥ २५ ॥ भिल्लो दूरश्रवा नाम तदानीं श्रुतवानिदम् । सकृच्छ्रवणमात्रेण वज्राङ्गोऽभवदप्यसौ ॥ २६ ॥ इत्येतद्वज्रकवचं दत्तात्रेयस्य योगिनः । श्रुत्वाशेषं शम्भुमुखात् पुनरप्याह पार्वती ॥ २७ ॥ पार्वत्युवाच ॥

एतत्कवचमाहात्म्यं वद विस्तरतो मम । कुत्र केन कदा जाप्यं किं यज्जाप्यं कथं कथम् ॥ २८ ॥ उवाच शंभुस्तत्सर्वं पार्वत्या विनयोदितम् ॥ श्रीशिव उवाच ॥ शृणु पार्वति वक्ष्यामि समाहितमनाविलम् ॥ २९ ॥ धर्मार्थकाममोक्षाणामिदमेव परायणम् । हस्त्यश्वरथपादातिसर्वैश्वर्यप्रदायकम् ॥ ३० ॥ पुत्रमित्रकलत्रादिसर्वसंतोषसाधनम् । वेदशास्त्रादिविद्यानां निधानं परमं हि तत् ॥ ३१ ॥ सङ्गीतशास्त्रसाहित्यसत्कवित्वविधायकम् । बुद्धिविद्यास्मृतिप्रज्ञामतिप्रौढिप्रदायकम् ॥ ३२ ॥ सर्वसंतोषकरणं सर्वदुःखनिवारणम् ॥ शत्रुसंहारकं शीघ्रं यशःकीर्तिविवर्धनम् ॥ ३३ ॥ अष्टसंख्या महारोगाः सन्निपातास्त्रयोदश । षण्णवत्यक्षिरोगाश्च विंशतिर्मेहरोगकाः ॥ ३४ ॥ अष्टादश तु कुष्ठानि गुल्मान्यष्टविधान्यपि । अशीतिर्वातरोगाश्च चत्वारिंशत्तु पैत्तिकाः ॥ ३५ ॥ विंशति श्लेष्मरोगाश्च क्षयचातुर्थिकादयः । मंत्रयंत्रकुयोगाद्याः कल्पतंत्रादिनिर्मिताः ॥ ३६ ॥ ब्रह्मराक्षसवेतालकूष्मांडादिग्रहोद्भवाः । संग्रजादेशकालस्थास्तापत्रयसमुत्थिताः ॥ ३७ ॥ नवग्रहसमुद्भूता महापातकसंभवाः । सर्वे रोगाः प्रणश्यन्ति सहस्रावर्तनाद्ध्रुवम् ॥ ३८ ॥ अयुतावृत्तिमात्रेण वंध्या पुत्रवती भवेत् । अयुतद्वितयावृत्त्या ह्यपमृत्युजयो भवेत् ॥ ३९ ॥ अयुतत्रितयाच्चैव खेचरत्वं प्रजायते । सहस्रादयुतादर्वाक् सर्वकार्याणि साधयेत् ॥ ४० ॥ लक्षावृत्त्या कार्यसिद्धिर्भवत्येव न संशयः ॥ ४१ ॥ विषवृक्षस्य मूलेषु तिष्ठन् वै दक्षिणामुखः । कुरुते मासमात्रेण वैरिणी विकलेंद्रियम् ॥ ४२ ॥ औदुंबरतरोर्मूले वृद्धिकामेन जाप्यते । श्रीवृक्षमूले श्रीकामी तिंतिणी शांतिकर्मणि ॥ ४३ ॥ ओजस्कामोऽश्वत्थमूले स्त्रीकामैः सहकारके । ज्ञानार्थी तुलसीमूले गर्भगेहे सुतार्थिभिः ॥ ४४ ॥

धनार्थिभिस्तु सुक्षेत्रे पशुकामैस्तु गोष्ठके । देवालये सर्वकामैस्तत्काले सर्वदर्शितम् ॥ ४५ ॥ नाभिमात्रजले स्थित्वा भानुमालोक्य यो जपेत् । युद्धे वा शास्त्रवादे वा सहस्रेण जयो भवेत् ॥ ४६ ॥ कण्ठमात्रे जले स्थित्वा यो रात्रौ कवचं पठेत् । ज्वरापस्मारकुष्ठादितापज्वरनिवारणम् ॥ ४७ ॥ यत्र यत्स्यातिस्थिरं यद्यत्प्रसन्नं तन्निवर्तते । तेन तत्र हि जप्तव्यं ततः सिद्धिर्भवेद्ध्रुवम् ॥ ४८ ॥ इत्युक्तवान् च शिवो गौर्यै रहस्यं परमं शुभम् । यः पठेत् वज्रकवचं दत्तात्रेयसमो भवेत् ॥ ४९ ॥ एवं शिवेन कथितं हिमवत्सुतायै प्रोक्तं दलादमुनयेऽत्रिसुतेन पूर्वम् । यः कोऽपि वज्रकवचं पठतीह लोके दत्तोपमश्चरति योगिवरश्चिरायुः ॥ ५० ॥ इति श्रीरुद्रयामले हिमवत्खंडे उमामहेश्वरसंवादे श्रीदत्तात्रेयवज्रकवचस्तोत्रं संपूर्णम् ॥

## ३६९. श्रीदत्तशरणाष्टकम् ।

श्रीपादश्रीवल्लभ त्वं सदैव श्रीदत्तास्मान्पाहि देवाधिदेव । भावग्राह्यक्लेशहारिन्सुकीर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते ॥ १ ॥ त्वं नो माता त्वं पिताप्तोऽधिपस्त्वं त्राता योगक्षेमकृत्सद्गुरुस्त्वम् । त्वं सर्वस्वं नो प्रभो विश्वमूर्ते घोरात्कष्टा० ॥ २ ॥ पापं तापं व्याधिमाधिं च दैन्यं भीतिं क्लेशं त्वं हराशु त्वदन्यम् । त्रातारं नो वीक्ष ईशास्तजूर्ते घोरात्कष्टा० ॥ ३ ॥ नान्यस्त्राता नापि दाता न भर्ता त्वत्तो देव त्वं शरण्योऽकहर्ता । कुर्वात्रेयानुग्रहं पूर्णराते घोरात्कष्टा० ॥ ४ ॥ धर्मे प्रीतिं सन्मतिं देवभक्तिं सत्संगाप्तिं देहि भुक्तिं च मुक्तिम् । भावासक्तिं चाखिलानंदमूर्ते घोरा० ॥ ५ ॥ श्लोकपंचकमेतद्यो लोकमंगलवर्धनम् । प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत् ॥ ६ ॥ इति वासुदेवानन्दसरस्वतियतिविरचितं दत्तशरणाष्टकस्तोत्रं संपूर्णम् ॥

श्रीमद्भागवतपुराणान्तर्गतानि

# ❀ दशावतारस्तोत्राणि ❀

## ३७०. मत्स्यस्तोत्रम् ।

श्रीगणेशाय नमः ॥ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः । अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ १ ॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर । भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २ ॥ सर्वे लीलावतारांस्ते भूतानां भूतिहेतवः । ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ ३ ॥ न तेऽरविन्दाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः । यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ४ ॥ इति श्रीमद्भागवतपुराणांतर्गतं मत्स्यस्तोत्रं संपूर्णम् ॥

## ३७१. कूर्मस्तोत्रम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः ॥ नमाम ते देव पदारविंदं प्रपन्नतापोपशमातपत्रम् । यन्मूलकेता यतयोऽजसोरुसंसारदुःखं बहिरुत्क्षिपंति ॥ १ ॥ धातर्यदस्मिन्भव ईश जीवास्तापत्रयेणोपहता न शर्म । आत्मँल्लभंते भगवंस्तवांघ्रिच्छायां सविद्यामत आश्रयेम ॥ २ ॥ मार्गंति यत्ते मुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयो विविक्ते । यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः ॥ ३ ॥ यच्छ्रद्धया श्रुतवत्या च भक्त्या संमृज्यमाने हृदयेऽवधाय । ज्ञानेन वैराग्यबलेन धीरा व्रजेम तत्तेऽघ्रिसरोजपीठम् ॥ ४ ॥ विश्वस्य जन्मस्थितिसंयमार्थे कृतावतारस्य पदांबुजं ते । व्रजेम सर्वे शरणं यदीश स्मृतं प्रयच्छत्यभयं स्वपुंसाम् ॥ ५ ॥ यत्सानुबंधेऽसति देहगेहे ममाह-

मित्यूढदुराग्रहाणाम् । पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन् पदाब्जम् ॥ ६ ॥ तान्वा असद्वृत्तिभिरक्षिभिर्ये पराहृतांतर्मनसः परेश । अथो न पश्यंत्युरुगाय नूनं ये ते पदन्यासविलासलक्ष्म्याः ॥ ७ ॥ पानेन ते देव कथासुधायाः प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथांजसाऽन्वीयुरकुण्ठधिष्ण्यम् ॥ ८ ॥ तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशंति तेषां श्रमः स्यान्न तु सेवया ते ॥ ९ ॥ तत्ते वयं लोकसिसृक्षयाद्य त्वयानुसृष्टास्त्रिभिरात्मभिः स्म । सर्वे वियुक्ताः स्वविहारतंत्रं न शक्नुमस्तत्प्रतिहर्तवे ते ॥ १० ॥ यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र । यथोभयेषां त इमे हि लोका बलिं हरंतोऽन्नमदंत्यनूहाः ॥ ११ ॥ त्वं नः सुराणामसि सान्वयानां कूटस्थ आद्यः पुरुषः पुराणः । त्वं देवशक्त्यां गुणकर्मयोनौ रेतस्त्वजायां कविमादधेऽजः ॥ १२ ॥ ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्करवाम किं ते । त्वं नः स्वचक्षुः परिदेहि शक्त्या देवक्रियार्थे यदनुग्रहाणाम् ॥ १३ ॥ इति श्रीमद्भागवतपुराणांतर्गतं कूर्मस्तोत्रं समाप्तम् ॥

## ३७२. वराहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ऋषय ऊचुः ॥ जितं जितं तेऽजित यज्ञभावना त्रयीं तनुं स्वां परिधुन्वते नमः । यद्रोमगर्तेषु निलिल्युरध्वरास्तस्मै नमः कारणसूकराय ते ॥ १ ॥ रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् । छंदांसि यस्य त्वचि बर्हि रोमस्वाज्यं दृशि त्वंघ्रिषु चातुर्होत्रम् ॥ २ ॥ स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरंध्रे । प्राशित्रमास्ये ग्रसने ग्रहास्तु ते

यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥ ३ ॥ दीक्षानुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः । जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥ ४ ॥ सोमस्तु रेतः सवनान्यवस्थितिसंस्थाविभेदास्तव देव धातवः । सत्राणि सर्वाणि शरीरसंधिस्त्वं सर्वयज्ञक्रतुरिष्टिबंधनः ॥ ५ ॥ नमो नमस्तेऽखिलयन्त्रदेवताद्रव्याय सर्वक्रतवे क्रियात्मने । वैराग्यभक्त्यात्मजयानुभावितज्ञानाय विद्यागुरवे नमो नमः ॥ ६ ॥ दंष्ट्राग्रकोट्या भगवंस्त्वया धृता विराजते भूधर भूः सभूधरा । यथा वनान्निःसरतो दता धृता मतंगजेंद्रस्य सपत्रपद्मिनी ॥ ७ ॥ त्रयीमयं रूपमिदं च सौकरं भूमंडले नाथ दतः धृतेन ते । चकास्ति शृंगोढघनेन भूयसा कुलाचलेंद्रस्य यथैव विभ्रमः ॥ ८ ॥ संस्थापयैनां जगतां सतस्थुषां लोकाय पत्नीमसि मातरं पिता । विधेम चास्यै नमसा सह त्वया यस्यां स्वतेजोऽग्निमिवारणावधाः ॥ ९ ॥ कः श्रद्दधीतान्यतमस्तव प्रभो रसां गताया भुव उद्विबर्हणम् । न विस्मयोऽसौ त्वयि विश्वविस्मये यो माययेदं ससृजेऽतिविस्मयम् ॥ १० ॥ विधुन्वता वेदमयं निजं वपुर्जनस्तपःसत्यनिवासिनो जयम् । सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमाना भृशमीश पाविताः ॥ ११ ॥ स वै बत भ्रष्टमतिस्तवैष ते यः कर्मणां पारमपारकर्मणः । यद्योगमायागुणयोगमोहितं विश्वं समस्तं भगवन्विधेहि शम् ॥ १२ ॥ इति श्रीमद्भागवतपुराणांतर्गतं वराहस्तोत्रं संपूर्णम् ॥

## ३७३. नृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ ब्रह्मोवाच ॥ नतोऽस्म्यनंताय दुरंतशक्तये विचित्रवीर्याय पवित्रकर्मणे । विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ १ ॥ श्रीरुद्र उवाच ॥ कोपकालो

युगांतस्ते हतोऽयमसुरोऽल्पकः । तत्सुतं पाह्युपसृतं भक्तं ते भक्त-वत्सल ॥ २ ॥ इंद्र उवाच ॥ प्रत्यानीताः परम भवता त्रायतां नः स्वभागा दैत्याक्रांतं हृदयकमलं त्वद्गृहं प्रत्यबोधि । कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां नहि बहुमता नारसिंहापरैः किम् ॥ ३ ॥ ऋषय ऊचुः ॥ त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज । तद्विप्रलुप्तममुनाद्य शरण्यपाल रक्षा-गृहीतवपुषा पुनरन्वमंस्थाः ॥ ४ ॥ पितर ऊचुः । श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु । तस्योदरान्नख-विदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ५ ॥ सिद्धा ऊचुः ॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन । नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ६ ॥ विद्याधरा ऊचुः । विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः । स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ७ ॥ नागा ऊचुः ॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः । तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ८ ॥ मनव ऊचुः ॥ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः । भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ॥ ९ ॥ प्रजापतय ऊचुः ॥ प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः । स एष त्वया भिन्नवक्षानुशेते जगन्मङ्गलं सत्त्वमूर्तेऽवहारः ॥ १० ॥ गन्धर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः । स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ११ ॥ चारणा ऊचुः ॥ हरे तवांघ्रिपंकजं भवापवर्गमाश्रिताः । यदेव साधु हृच्छयस्त्वयाऽसुरः समापितः ॥ १२ ॥ यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह

दितिसुतेन प्रापिता वाहकत्वम् । स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पंचतां पंचविंशः ॥ १३ ॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वर । अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ १४ ॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे । यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथामयः ॥ १५ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः । भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ १६ ॥ विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म । सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥१७॥ इति श्रीमद्भागवतपुराणांतर्गतं नृसिंहस्तोत्रं संपूर्णम् ॥

## ३७४. लक्ष्मीनृसिंहस्तोत्रम् ।

श्रीगणेशाय नमः ॥ श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजितपुण्यमूर्ते । योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ १ ॥ ब्रह्मेंद्ररुद्रमरुदर्ककिरीटकोटिसंघट्टिताङ्घ्रिकमलामलकांतिकांत । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलंबम् ॥ २ ॥ संसारघोरगहने चरतो मुरारे मारोग्रभीकरमृगप्रवरार्दितस्य । आर्तस्य मत्सरनिदाघनिपीडितस्य लक्ष्मीनृसिंह० ॥ ३ ॥ संसारकूपमतिघोरमगाधमूलं संप्राप्य दुःखशतसर्पसमाकुलस्य । दीनस्य देव कृपणापदमागतस्य लक्ष्मीनृसिंह० ॥ ४ ॥ संसारसागरविशालकरालकालनक्रग्रहग्रसननिग्रहविग्रहस्य । व्यग्रस्य रागरसनोर्मिनिपीडितस्य लक्ष्मीनृसिंह० ॥ ५ ॥ संसारवृक्षभवबीजमनंतकर्मशाखाशतं करणपत्रमनंगपुष्पम् । आरुह्य दुःखफलितं पततो दयालो लक्ष्मीनृसिंह० ॥ ६ ॥ संसारसर्पघनवक्त्रभयोग्रती-

